# सर्वलक्षणपदार्थलक्षणसंग्रहः



गौरीशंकरभिक्षुविरचितः सर्वतन्त्रसिद्धान्तपदार्थलक्षणसंग्रहः

श्रीगणेशाय नमः ,नमः परमर्षिभ्यः

त्वां विना निःस्वरुपोऽहं मां विना त्वं कथं स्थितः ।
दिष्ट्येदानीं मया लब्धो योऽसि सोऽसि नमोस्तु ते ।।
श्रीचेतनकिङ्कराह्वश्रीमद्रामपुर्याह्वयोः ।
वन्दे पादौ तथा श्रीमद्धीरालालाह्वधीमताम् ।।
श्रद्धाधनेन संगृहीतं गौरीशंकरभिक्षुणा ।
बोधाय वादिबाधाय विदुषां कण्ठभूषणम् ।।
क्व ! ग्रन्थकरणं क्व त्वमिति मा जानतास्तिकाः ।
सत्संगानुग्रहः किं ? किं न करोत्येवमाह वाक् ।।
प्रज्ञा शब्दमयस्यास्य देहस्य मम दुर्जनाः ।
दयद्ध्वं प्रहरद्ध्वं तु चेदिष्टं पाञ्चभौतिके ।।
प्रमाणसिद्धान्तविरुद्धमत्र यत्किन्चनाभून्मतिमान्द्यदोषात् ।
मात्सर्यमुत्सार्य महानुभावाः प्रसादमाधाय विशोधयन्तु ।।
विद्वांसो यदि मम दोषमुद्गिरेयुः
यद्वा ते गुणगणमेव कीर्तयेयुः ।
तुल्यं तद्वहु मनुते मनो मदीयं
कष्टं तद्वद् मनुते यदाह मन्दः ।।
दोषत्वमुज्वलगुणा अपि यान्ति येषु
तैरुन्नतेः किमथवेह तिरस्कृतेः किम् ।
दोषोऽपि येषु गुणतामुपयान्ति भूयान्
तेभ्यो नमोस्तु सततं भुवि सज्जनेभ्यः ।।

ननु किमर्थं लक्षणसंग्रहारंभो लक्षणानामनुपयोगादिति चेदुच्यते – अस्ति हि महानुपयोगस्तथा हि यथा विवाहे सलक्षणो वरो लक्षणवतीं कन्यामुपयच्छेतेति – अविप्लुतब्रह्मचर्यो लक्षण्यां स्त्रियमुद्वहेत्
एतैरेव गुणैर्युक्तः सवर्णः श्रोत्रियो वरः
इत्यादिवचनैः स्त्रिपुरुषसामुद्रिकलक्षणानां विवाह उपयोगात् ।
लिङ्गं सलक्षणं पूज्यं त्यजेल्लिङ्गमलक्षणम् ।
तस्मात्सर्वप्रयत्नेन लिङ्गं कुर्यात् सलक्षणम् ।।
इत्यादिवचनैर्लिङ्गलक्षणानां तत्पूजादावुपयोगात् , एवामन्येषामपि लक्षणानां यथासंभवमुपयोगाद्युक्त एव लक्षणसंग्रहारम्भ इति । लक्षणानामुपयोगः पूर्वाचार्यैरपि दर्शितः –
ऋषयोपि पदार्थानां नान्तं यान्ति पृथक्त्वशः।
लक्षणेन तु सिद्धानामन्तं यान्ति विपश्चितः ।।
किञ्च – लक्षणप्रमाणाभ्यां वस्तुसिद्धिर्न तु प्रतिज्ञामात्रेणेति न्यायादपि पदार्थ लक्षणमवश्यमपेक्षणीयम् । तत्र प्रमाणं विहाय लक्षणानि निरूपयाम इति ।

अ

अकस्मात्वम्

कारणाधीनत्वमनिश्चितकारणत्वं वा ।

।। अक्रूरत्वम् ।।

वृथापूर्वपक्षादिकारिष्वपि शिष्यादिष्वप्रियभाषणादिव्यतिरेकेण बोधयितृत्वम् ।

।। अक्षरत्वम् ।।

वर्णस्मारकत्वे सति लिपिसन्निवेशत्वम् ।

।। अखण्डार्थत्वम् ।।

सजातीयविजातीयस्वगतभेदशून्यत्वम् । साङ्ख्यात्मन्यतिव्याप्तिवारणाय सजातीयेति , आकाशेतिव्याप्तिवारणाय विजातीयेति । अपर्यायानेकशब्दप्रकाश्यत्वे सत्यविशिष्टत्वम् । नीलो घट इत्याद्यपर्यायानेकशब्दप्रकाश्ये तादात्म्येन नीलविशिष्टे

घटाद्यर्थेतिप्रसङ्गवारणार्थमविशिष्टत्वदलम् , तथा “ घटः कलशः कुम्भः ” इत्यादिपर्यायानेकशब्दप्रकाश्ये अविशिष्टे घटादावतिप्रसङ्गव्युदासाय सत्यन्तम् ।

।। अखण्डार्थवाक्यत्वम् ।।

संसर्गानवगाहियथार्थज्ञानजनकत्वम् । राजपुरुष इत्यादौ संसर्गपरे वाक्येतिव्याप्तिवारणाय संसर्गानवगाहीति । तत्प्रातिपदिकार्थमात्रपर्यवसायित्वम् ।

।। अखंडोपाधिः।।

अनिर्वचनीयो धर्मः । असमवेतत्वे सत्यनुगतत्वम् ।

।। अख्यातिः ।।

स्वरूपतो विषयतश्चागृहीतभेदेनैकज्ञानम् । एकविषयानेकज्ञानेष्वतिव्याप्ति- परिहारार्थं स्वरूपपदम् , समूहालंबनज्ञानेतिव्व्याप्तिपरिहारार्थं विषय इति विशेषणम् , ख्यातेरेव = भ्रमज्ञानस्यैव अभाव इति ।

।। अग्निहोत्रम् ।।

आहितेष्वग्निषु सायं प्रातश्चानुष्ठेयो होमः ।

।। अघटकत्वम् ।।

तद्विषयत्वाव्यापकविषयतावत्वम् ।

।। अङ्गत्वम् ।।

उपकारकत्वम् । तदीयप्रधानफलजनकव्यापारजनकत्वे सति तदीयप्रधानफलाजनकत्वम् । घटादावतिव्याप्तिवारणाय सत्यन्तम् । वेदार्थज्ञानोपयोगित्वम् ।

।। अजहल्लक्षणा ।।

शक्यार्थापरित्यागेन तत्संबन्ध्यर्थान्तरे वृत्तिः , यथा शोणो धावतीत्यत्र शोणपदस्य शोणगुणविशिष्टे अश्वादिद्रव्ये । जहल्लक्षणायामतिव्याप्तिवारणाय शक्यर्थापरित्यागेनेति । लक्ष्यतावच्छेदकरूपेण लक्ष्यशक्योभयबोधप्रयोजिका लक्षणा ।

।। अज्ञत्वम् ।।

गुरुमुखानधीतशास्त्रत्वम् , आत्मज्ञानशून्यत्वं वा । आत्मानं जानातीति ज्ञः न ज्ञः अज्ञः ।

।। अज्ञानम् ।।

कार्यमात्रोपादानत्वे सति सदसद्भ्यामनिर्वचनीयम् । अनादिभावरूपत्वे सति विज्ञाननिरास्यम् । उत्तरज्ञाननिवर्त्यपूर्वज्ञानवारणायानादिरूपेति , प्रागभाववारणाय ,ज्ञानाभावो अज्ञानमित्याशङ्कानिरासार्थं वा भावरूपेति, आत्मन्यतिव्याप्तिवारणाय ज्ञाननिरास्यमिति । मिथ्यात्वे सति साक्षाज्ज्ञाननिवर्त्यत्वम् । ज्ञानेनेच्छाप्रागभावः साक्षान्निवर्त्यत इति वदन्तं प्रति सत्यन्तम् , अज्ञाननिवृत्तिद्वारा ज्ञाननिवर्त्यबन्धे अतिव्याप्तिवारणाय साक्षादिति । अनाद्युपादानत्वे सति मिथ्यात्वम् । ब्रह्मनिरासार्थं मिथ्यात्वमिति ,मृदादिनिरासार्थमनादीति ,अविद्यात्मनोः संबन्धनिरासार्थमुपादानत्वे सतीति ।

।। अज्ञाननिग्रहस्थानम् ।।

परिषदा विज्ञातस्य वादिना त्रिरभिहितस्यापि वाक्यार्थस्याबोधः ।

।। अणुत्वम् ।।

सूक्ष्मपदार्थत्वे सत्यारंभकत्वम् ।

।। अतिक्रमणम् ।।

उचितादधिकस्यानुष्ठानम् ।

।। अतिथिः ।।

अज्ञातपूर्वगृहागतव्यक्तिः ।

।। अतिदेशः ।।

स्वविषयमुल्लङ्घ्यान्यविषये उपदेशः । एकत्र श्रुतस्यान्यत्र संबन्धः ।

।। अतिप्रसङ्गः ।।

यस्य बोधो यत्राभिमतस्तदन्यस्यापि बोधप्रसङ्गः । प्रस्तुतविषयादन्यत्र प्रसक्तिर्वा ।

।। अतिवादः ।।

निरर्थकोतिप्रलापः ।

।। अतिव्याप्तित्वम् ।।

लक्ष्यवृत्तित्वे सत्यलक्ष्यवृत्तित्वम् ,यथा गोः श्रिङ्गित्वं लक्ष्यणम् । लक्ष्यगोवृत्तित्वे सत्यलक्ष्यमहिष्यादिवृत्ति ।

।। अतिशयतापः ।।

स्वाधिकतरदेवतोत्कर्षदर्शने जायमानस्तापः ।

।। अतिशयोक्तिः ।।

पौर्वापर्यविपर्ययः ।

।। अतीन्द्रियत्वम् ।। लौकिकसाक्षात्कारविषयगुणत्वन्यूनवृत्तिसन्स्कारत्वान्यधर्मसमवाय्यन्यगुणत्वम् ।

|| अत्यन्तनिवृत्तिः ||

कारणसहितकार्यनिवृत्तिः,स्वप्रतियोगिजातीयप्रागभावासमानाधिकरणवृत्तिर्वा

|| अत्यन्ताभावः ||

त्रैकालिकसंसर्गावच्छिन्नप्रतियोगिताकोऽभावः , यथा भूतले घटो नास्ति, ध्वन्सप्रागभाववारणाय त्रैकालिकेति , भेदवारणाय संसर्गेत्यादि ।

|| अदृष्टत्वम् ||

विधिनिषेधजन्यत्वे सत्यतीन्द्रियत्वम् ।

|| अद्भूतः ||

सिद्धस्य धर्मिणो धर्म्यन्तरावयवैर्योगः । विस्मयजनको व्यापारः । चकिताद्यनुभावितत्वे सति हर्षादिसंचारितत्वं वा ।

|| अद्वैतत्वम् ||

सजातीयविजातीयस्वगतभेदशून्यत्वम् ।

|| अधमत्वम् ||

भयदयालज्जाशून्यत्वम् , कामक्रीडाविषये कर्तव्याकर्तव्याविचारकत्वमिति रसमञ्जर्याम् ।

|| अधर्मः ||

वेदादिनिषिद्धकर्मजन्यनरकजनकत्वम् , वेदादिनिषिद्धकर्मजन्यं पापम् । वेदबोधितानिष्टसाधनताकत्वम् , विषभक्षणादिवरणाय वेदेति । ब्रह्मयागादिवारणायानिष्टेति ।

|| अधिकम् ||

अधिकहेत्वादिकथनम् , योग्यपरिमाणातिक्रमत्वम् ।

|| अधिकरणम् ||

साक्षात्परंपरया वा क्रियाश्रयः, कर्तृकर्मद्वारकफलव्यापाराधारः, यथा स्थाल्यामोदनं गृहे पचतीति । वेदविचारात्मको न्यायः । विषयो विशयश्चैव पूर्वपक्षस्तथोत्तरम् । निर्णयश्चेति पञ्चाङ्गं शास्त्रेधिकरणं विदुः ||

|| अधिकारः ||

उत्तरोत्तरसंबन्धः , फलभोक्त्रित्वे सति कर्मकर्तृत्वम् , यथेष्टं क्रयविक्रयादिकर्तृत्वसंपादकस्स्वामित्वमिति धर्मशास्त्रज्ञा इति । स्वदेशे लक्ष्यसन्स्कारोपयोगिवाक्यार्थबोधाजनकत्वे सति परदेशे वाक्यार्थबोधजनकत्वमिति वैयाकरणाः । अनेकदेहारंभक बलवत्प्रारब्धकर्मफलत्वम् ।

|| अधिकारविधिः ||

सेतिकर्तव्यताकस्य करणस्य यागादेः फलसंबन्धो विधिः , यथा यजेत स्वर्गकामः ।

|| अधिकारी ||

मुख्यगौणप्रयोजनप्रप्तिकामी । तत्तत्कर्मजन्यफलार्थित्वम् । तत्तत्कर्मकरणयोग्यतावान् । मलविक्षेपरहितत्वे सति साधनचतुष्टयसंपन्नत्वे सति स्वस्वरूपज्ञानवत्वम् ।

|| अधिष्ठातृत्वम् ||

संनिधानमात्रेण तत्तत्पदार्थानां तत्तत्कर्मषु नियन्त्रित्वम् ।

|| अधिष्ठानम् ||

यदाधारमारोप्यं भासते तत् । सत्तास्फूर्तिप्रदात्रित्वम् । सविलासाज्ञानविषयत्वं वा । स्वबुद्धिबाद्ध्यकार्याधारत्वमित्यपि ।

|| अद्ध्ययनम् ||

अक्षरमात्रपाठ इति वैदिकाः । सार्थाक्षरग्रहणमिति मीमान्सकाः। पूर्वगुरुमुखोच्चारणत्वे सत्युत्तरशिष्योच्चारणत्वम् ।

|| अध्यस्तत्वम् ||

संप्रयोगसन्स्कारजन्यत्वे सति प्रत्यभिज्ञाभिन्नत्वम् ।

|| अद्ध्यात्मत्वम् ||

आत्मानां देहेन्द्रियादिकं क्षेत्रज्ञ ब्रह्म वा अधिकृत्य वर्तमानत्वम् ।

|| अद्ध्यात्मशास्त्रत्वम् ||

आत्मानमधिकृत्य प्रवृत्तं शास्त्रम् ।

|| अद्ध्यारोपः ||

वस्तुन्यवस्त्वारोपः , यथा शुक्तिकाशकलादौ रजतादेः ।

|| अद्ध्यासः ||

परत्र परावभासः । अधिष्ठानविषमसत्ताकावभास इति परिमले । एकावच्छेदेन स्वसन्सृज्यमाने स्वात्यन्ताभाववत्यवभासः । स्वात्यन्ताभाववत्यवभास एतावन्मात्रोक्तौ यत्र भूतलादौ घटोपसरितः पुनश्चानीतस्तादृशघटादावतिप्रसङ्गः स्यादिति स्वसंसृज्यमान इत्युक्तम् ।

एवमपि मूलावच्छेदेन कपिसंयोगात्यन्ताभाववति वृक्षे शाखाग्रावच्छेदेन च तत्संसृज्यमाने अवभासमानत्वात्संयोगस्य तत्रतिप्रसङ्गः स्यादित्यत एकावच्छेदेनेत्युक्तम् । अधिष्ठानसामान्यज्ञानजन्यत्वे सति दोषजन्यत्वम् ।

पारमार्थिकत्वावच्छिन्नस्वात्यन्ताभावाधिकरणे प्रतीयमानत्वमिति तत्वविवेके। स द्विविधो ज्ञानाद्ध्यासः , अर्थाद्ध्यासश्च । यद्वा स्वरूपाद्ध्यासः , संसर्गाद्ध्यासश्च इति द्विविध अद्ध्यासः । तत्राद्यो रज्ज्वादौ भुजंगाध्यास आत्मनि वा अनात्माध्यासः । द्वितीयस्तु स्फटिके लौहित्यस्य शङ्खे च पीतिम्न अनात्मनि चात्मतद्धर्मादेः , आत्मादेः पारमार्थिकत्वेन स्वरूपत अद्ध्यासाभावात् । अथवा प्रकारान्तरेण सोपाधिको निरुपाधिकश्चेति भेदादद्ध्यासो द्विविधः । द्विविधोप्यसौ बाह्याभ्यान्तरभेदात्पुनर्द्विविधः । तत्र लोहितस्फटिकादिर्बाह्यः सोपाधिको भ्रमः , जपाकुसुमादेरुपाधित्वात् । कर्तृत्वादिभ्रम आन्तरः ,कर्मरूपेण परिणता अविद्यारूपोपाधिकार्यत्वात् । शुक्तिरूप्यादिस्तु बाह्यो निरुपाधिको भ्रमः। आकशादिभ्रमोपि बाह्यो निरुपाधिकः । अहमज्ञो ब्रह्म न जानामीत्याद्याभ्यन्तरो निरुपाधिको भ्रमः । इत्यादीनि बोद्धव्यानि । विस्तरस्तु गुरुमुखादेवावगन्तव्यम् ।

।। अद्ध्याहारः ।।

अगतिका गतिः । प्रकृतोपयोगिशब्दकल्पनम् । श्रुतपदानुसन्धानं वा ।

।। अद्ध्वर्युत्वम् ।।

कर्मारंभसमाप्तिकर्तृत्वम् ।

।। अनवस्था ।।

उपपाद्योपपादकप्रवाहोनवधिः । चक्रकव्व्यावृत्यर्थमनवधिरिति , साकांक्ष्यतापरिहारायोपपाद्योपपादकेति ।